वह अनित्य है। यही वेद मनके वेदमें है। और इसीका वर्णन इस अष्टादशश्लोकी गीता में है।

समस्त शरीरके अन्तःकरणमें शब्दयोगका अधिकार लेकर मनका निवास है। वह चक्षुके द्वारा बाहरी रूपका ग्रहण करता है। प्रयोजन समझकर दूसरेको समझानेके वास्ते मुखसे शब्द-का उच्चारण करता है। उस शब्दको दूसरा कानके द्वारा ग्रहण करता है। और चक्षुके द्वारा सामनेके रूपको देखता है। पुनः बोलता है। ये ही ६ सम्बन्ध दो शरीरोंमें होते हैं—मनके साथ ज्ञानेन्द्रिय और कर्मेन्द्रियोंके योगसे ५ और १ स्वतन्त्र मनका। उन्हींको शिक्षा, व्याकरण, निरुक्त, छन्द, ज्यौतिष और कल्प = कल्पना कहते हैं। दो शरीरोंमें वेद=वेदान्त है। शरीरका नाम वेदान्त है। क्योंकि कभी तो सम्बन्ध होनेसे उसकी उत्पत्ति होती है, और कभी भोग होनेसे उसका नाश होता है। मनमें जो पूर्वकी वस्तु लायी गयी है वही शिक्षा है। जो उसके संकेतसे व्यवहृत होता है वह व्याकरण है। जो फलका निश्चय किया जाता है वह निरुक्त है। जो फल संसारमें दूसरेके पास है उसको अपने अनुकूल देखना छन्द है। लक्षणा करके ग्रहण करना ज्यौतिष है। फलकी कल्पना करना कल्प है। एक वक्त शरीरके शब्दयोग से अधिकार बनता है और दूसरे वक्त भोग होकर संन्यास होता है। शब्दसे रूप समझा जाता है और रूपके द्वारा रसका मनमें ज्ञान होता है। उसका नाम वेद है। मुखके द्वारा दूसरोंको शब्द और रूपका ज्ञान कराया जाता है, रूपका चक्षुसे और रसका रसनासे ज्ञान होता है। एक शरीरसे अधिकार होता है और दूसरे शरीरसे भोग होता है। वर्तमानमें पूर्वकर्म का भोग होता है और उत्तरमें त्यागकर्म का अधिकार होता है। इसीका विस्तारके साथ कर्म-धर्मके नाम

से गीताके ७०० श्लोकोंमें वर्णन किया गया है कर्म (कीर्ति) कानसे सुना जाता है और धर्म (शरीर) चक्षुसे दीखता है; श्रुतिसे अधिकार-कर्म जाना जाता है, लक्षणासे प्रिय और अप्रिय समझकर भोग होता है। कर्मेन्द्रियों के त्यागसे उत्तरकर्म बनता है और ज्ञानेन्द्रियोंके भोगसे संन्यास होता है। यही दो कर्म मुख्य हैं, और यही वेद पुरुषका स्वरूप है। इससे यही सिद्ध होता है कि—वेद बीजस्वरूप है क्योंकि भूतमें इसका नाम है; और भविष्यमें उसका वृक्ष, फल, और बीज है।

# अष्टादशश्लोकी वेदगीता

( १ )

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥

गीता, अ० २, श्लो० २१

( २ )

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥

गीता अ० ७, श्लो० २६

( ३ )

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥

गीता अ० ८, श्लो० २८

( ४ )

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥

गीता, अ० १०, श्लो० २२

( ५ )

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥

गीता, अ० २, श्लो० ४५

( ६ )

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥

गीता, अ० ८, श्लो० ११

( ७ )

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥

गीता, अ० ११, श्लो० ४८

( ८ )

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

गीता, अ० ११, श्लो० ५३

( ९ )

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥

गीता, अ० २ श्लो० ४२

( १० )

यावनार्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥

गीता, अ० २, श्लो० ४६

( ११ )

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥

गीता, अ० २, श्लो० ५२

( १२ )

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥

गीता, अ० ४, श्लो० ५

( १३ )

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥

गीता, अ० ७, श्लो० ८

( १४ )

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम् ॥

गीता, अ० १५, श्लो० १५

( १५ )

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

गीता, अ० १५, श्लो० १८

( १६ )

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥

गीता, अ० १७, श्लो० २३

( १७ )

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद् वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥

गीता, अ० २, श्लो० २९

( १८ )

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥

गीता, अ० १५, श्लो० १

———

(१) शाङ्करी (२) श्रीधरी तथा (३) भावार्थबोधिनी ।

(१)

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥

गीता, अ० २, श्लो० २१

य एनं वेत्ति हन्तारं ( गी० २. १९ ) इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय "न जायते" (गी० २. २०) इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—

( शाङ्करभाष्यम् ) वेदाविनाशिनमिति—वेद विजानात्यविनाशिनमन्त्याभावविकाररहितं नित्यं विपरिणामरहितं यो वेदेति सम्बन्धः । एनं पूर्वेण मन्त्रेणोक्तलक्षणमजं जन्मरहितमव्ययमपक्षयरहितं कथं केन प्रकारेण स विद्वान्पुरुषोऽधिकृतो हन्ति हननक्रियां करोति, कथं वा घातयति हन्तारं प्रयोजयति । न कथञ्चित्कञ्चिद्धन्ति न कथञ्चित्कञ्चिद् घातयतीत्युभयत्राक्षेप एवार्थः, प्रश्नार्थासम्भवात् । हेत्वर्थस्य अविक्रियत्वस्य च तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः । हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन कथितः । विदुषः कं कर्मासम्भवे हेतुविशेषं पश्यन्कर्माण्याक्षिपति भगवान् कथं स पुरुष

इति। ननूक्त एवात्मनोऽविक्रियत्वं सर्वकर्मासम्भवकारणविशेषः सत्यमुक्तः, न तु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मनः। न ह्यविक्रियं स्थाणुं विदितवतः कर्म सम्भवतीति चेन्न, विदुष आत्मत्वात्, न देहादिसङ्घातस्य विद्वत्ता। अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासम्भवादाक्षेपो युक्तः—कथं स पुरुष इति। तथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन् बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धात्मा कल्प्यते, एवमेवात्मनात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्ययाऽसत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते। विदुषः कर्मासम्भववचनाद्यानि कर्माणि शास्त्रेण विधीयन्ते, तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते।

ननु विद्याऽप्यविदुष एव विधीयते, विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात्। तत्राविदुषः कर्माणि विधीयन्ते, न विदुष इति विशेषो नोपपद्यते इति चेन्न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः। अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं 'कर्ताऽहम्' 'मम कर्तव्यम्' इत्येवंप्रकारकविज्ञानवतोऽविदुषो यथाऽनुष्ठेयं भवति,न तु तथा, न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किञ्चिदनुष्ठेयं भवति। किन्तु 'नाहं कर्ता' 'नाहं भोक्ता' इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यत इत्येष विशेष उपपद्यते। यः पुनः कर्ताऽहमिति वेत्त्यात्मानं तस्य ममेदं कर्तव्यमित्यवश्यम्भाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि सम्भवन्ति, स चाविद्वान् "उभौ तौ न विजानीतः" [ गी० २। १९ ] इति वचनात्। विशेषितस्य च विदुषः कर्माक्षेपवचनाच्च कथं स पुरुष इति।

तस्माद्विशेषितस्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः। अतएव भगवान्नारायणः साङ्ख्यान्विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—"ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" [ गी० ३ । ३ ] तथा च पुत्रायाऽऽह भगवान् व्यासः—"द्वाविमावथ पन्थानौ" [ म० भा०, शान्तिप० २४० । ६ ] इत्यादि।

तथा च क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्चेति। एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान्। अतत्त्ववित् "अहंकारविमूढात्मा कर्ताऽहमिति मन्यते" [ गी० ३ ।२७ ] तत्त्ववित्तु नाहं करोमीति। तथा च "सर्वकर्माणि मनसा संन्यस्यास्ते" [ गी० ५ । १३ ] इत्यादि।

तत्र केचित्पण्डितम्मन्या वदन्ति—जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसंन्यास उपदिश्यत इति, तन्न, "न जायते" इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात्। यथा च शास्त्रोपदेशसामर्थ्याद्धर्माऽधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसम्बन्धिविज्ञानं चोत्पद्यते, तथा शास्त्रात्तस्यैवात्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नोत्पद्यत इति प्रष्टव्यास्ते। करणागोचरत्वादिति चेन्न, "मनसैवानुद्रष्टव्यम्" [ बृ० ४, ४, १९ ] इति श्रुतिः। शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम्। तथा च तदधिगमायानुमाने आगमे च सति ज्ञानं नोत्पद्यत इति साहसमात्रमेतत्। ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम्। तच्चाज्ञानं दर्शितं हन्ताऽहं हतोऽस्मीति "उभौ तौ न विजानीतः"[गी०२;१९] इति। अत्र चात्मनो हनन-

क्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वं चाज्ञानकृतं दर्शितम। तच्च सर्वक्रियास्वपि समानम्, कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः। विक्रियावान् हि कर्ताऽऽत्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति। तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् वासुदेवः विदुषः कर्माधिकाराभावप्रदर्शनार्थं 'वेदाविनाशिनं·········कथं स पुरुषः पार्थ' इत्यादिना। क्व पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव "ज्ञानयोगेन साङ्ख्यानाम्" [ गी० ३, ३ ] इति। तथा च सर्वकर्मसंन्यासं वक्ष्यति "सर्वकर्माणि मनसा" [ गी० ५, १३ ] इत्यादिना।

ननु मनसेति वचनाद्वाचिकानां कायिकानां च संन्यास इति चेन्न, सर्वकर्माणीति विशेषितत्वात्। मानसानामेव सर्वकर्मणामिति चेन्न, मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनो व्यापाराभावे तदनुपपत्तेः। शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वाऽन्यानि सर्वकर्माणि मनसा संन्यस्यास्ते इति चेन्न, "नैव कुर्वन्नकारयन्" [गी०५, १३] इति विशेषणात्। सर्वकर्मसंन्यासोऽयं भगवतोक्तो मरिष्यतो न जीवित इति चेन्न, नवद्वारे पुरे देही·····आस्ते [ गी० ५, १३ ] इति विशेषणानुपपत्तेः। न हि सर्वकर्मसंन्यासेन मृतस्य तद्देह आसनं सम्भवति।

अकुर्वतोऽकारयतश्च देहे संन्यस्येति सम्बन्धो न देह आस्त इति चेन्न, सर्वत्रात्मनोऽविक्रियत्वावधारणात् आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य। सम्पूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थः। तस्माद् गीताशास्त्रे आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणि इति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥२१॥

(श्रीधरीव्याख्या) वेदेति—नित्यं वृद्धिशून्यम्, अव्ययमप-

क्षयशून्यम्, अजमविनाशिनं च यो वेद स पुरुषः कं हन्ति कथं वा हन्ति, एवम्भूतस्य वधे साधनाभावात्। तथा स्वयं प्रयोजको भूत्वाऽन्येन कं घातयति। न कञ्चिदपि कथञ्चिदपीत्यर्थः। अनेन मय्यपि प्रयोजकत्वाद्दोषदृष्टिं मा कार्षीरित्युक्तं भवति॥

(भावार्थबोधिनी) वेदाविनाशिनं नित्यमिति—शास्त्रमें वर्तमानकालमें, जिससे पूर्वकी कर्मजाति मनमें और जातिकर्म भावमें आता है, उसका नाम वेद है। जैसे-शरीरके अन्दर मन वेद है। उसी तरह वनस्पतिके फलके अन्दर बीज भी वेद है। कर्मधर्मका जाति के अनुसार भोग होकर वर्तमान शरीरका नाश होता है। भूतकालकी क्रिया कर्म और जातिसे भविष्यमें फल और शरीर उत्पन्न होता है। यह बीज और मन नित्य है। फल व्यय है, तथा शरीर अनित्य है। जैसे-शरीरमें पुरुषही वेदपुरुष है, उसी प्रकार बीजमें भी वेदपुरुष है। आमकी गुठली बो देने पर गुठलीरूपी शरीरका नाश होकर अंकुरसे फिर वही आम्रबीज प्रादुर्भूत होता है। यही बीजरूपी वेदपुरुष है। इसीको समझना चाहिये। यही ऊपरके श्लोकसे कहा गया है।

(२)

वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन॥

गीता, अ० ७, श्लो० २६

यत एवमतः—

(शाङ्करभाष्यम्) वेदेति—अहन्तु वेद जाने समतीतानि

समतिक्रान्तानि भूतानि, वर्तमानानि चार्जुन, भविष्याणि च भूतानि वेदाहम्, मां तु वेद न कश्चन, मद्भक्तं मच्छरणमेकं मुक्त्वा मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥

सर्वोत्तमं मत्स्वरूपमजानन्त इत्युक्तम्—तदेव स्वस्य सर्वोत्तमत्वमनावृतज्ञानशक्तित्वेन दर्शयन्नन्येषामज्ञानमेवाह—

( श्रीधरीव्याख्या ) वेदेति । समतीतानि विनष्टानि वर्तमानानि भावीनि च त्रिकालवर्तीनि भूतानि स्थावरजङ्गमानि सर्वाण्यहं वेद जानामि, मायाऽश्रयत्वान्मम तस्याः स्वाश्रयव्यामोहकत्वाभावादिति प्रसिद्धम् । मां तु न कोऽपि वेत्ति, मन्मायामोहितत्वात् । प्रसिद्धं हि लोके मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वं च ॥२६॥

( भावार्थबोधिनी ) वेदाहं समतीतानीति—बीज अपनी जातिके स्वभावसे बीजके समान ही अङ्कुर उत्पन्न करता है। और वर्तमान कालमें जो भाव था वह भूत से आता है वही भविष्यमें जाता है। वह सर्वत्र सम है।

( ३ )

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥

शृणु तस्य योगस्य माहात्म्यम्—

( शाङ्करभाष्यम् ) वेदेष्विति । वेदेषु सम्यगधीतेषु, यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु, एतेषु यत्पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत्सर्वं फलजातम्, इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तमर्थं सम्यगवधार्यानुष्ठाय योगी परं प्रकृष्टमैश्वरं स्थानमुपैति च प्रतिपद्यते, आद्यमादौ भवम्, कारणं ब्रह्मेत्यर्थः ॥ २८ ॥

अध्यायार्थमष्टप्रश्नार्थनिर्णयं सफलमुपसंहरति—

( श्रीधरीव्याख्या ) वेदेष्विति । वेदेष्वध्ययनादिभिः, यज्ञेष्वनुष्ठानादिभिः, तपःसु कायशोषणादिभिः, दानेषु सत्पात्रार्पणादिभिः, यत्पुण्यफलमुपदिष्टं शास्त्रेषु तत्सर्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्यं प्राप्नोति किं कृत्वा । इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्त्वं विदित्वा ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टमाद्यं जगन्मूलभूतस्थानं विष्णोः परमं पदं प्राप्नोति ॥ २८ ॥

( भावार्थबोधिनी ) वेदेषु यज्ञेषु तपःसु चैव इति—वह बीजका अङ्कुर यज्ञ और तपसे बढ़कर वृक्ष बनता है । फिर वही पृथ्वीके रसको लेकर अपने स्वभावसे फल दिखाता है । यही सब वृक्षोंमें तथा शरीरमें स्व-स्वभावके अनुकूल पूर्वके योगसे ( जैसा बीजका स्वभाव था वैसा ही ) वर्तमान में वृक्ष तथा शरीर बनता है ।

( ४ )

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥

गीता, अ० १०, श्लो० २२

(शाङ्करभाष्यम्) वेदानामिति—वेदानां मध्ये सामवेदोऽस्मि। देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि। इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि सङ्कल्पविकल्पात्मकं मनश्चास्मि। भूतानामस्मि चेतना कार्यकरणसङ्घाते नित्याऽभिव्यक्ता बुद्धिवृत्तिश्चेतना॥ २२॥

(श्रीधरीव्याख्या) वेदानामिति—वासव इन्द्रः भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिरहमस्मि॥ २२

(भावार्थ बोधिनी) वेदानां सामवेदोऽस्मि इति वेदोंमें पूर्वकर्मसे सामवेद मैं हूँ। देवोंमें बलसे इन्द्र मैं हूँ। इन्द्रियोंमें मन मैं हूँ और प्राणियोंकी आत्मासे चेतन मैं हूँ।

( ५ )

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥

गीता, अ० २, श्लो० ४५

य एवं विवेकबुद्धिरहितास्तेषां कामात्मनां यत्फलं तदाह—

( शाङ्करभाष्यम् ) त्रैगुण्येति त्रैगुण्यविषयास्त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषां ते वेदास्त्रैगुण्यविषयाः। त्वं तु निस्त्रैगुण्यो भवार्जुन निष्कामो भवेत्यर्थः। निर्द्वन्द्वः सुखदुःख-हेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ ततो निर्गतो निर्द्वन्द्वो भव। त्वं नित्यसत्त्वस्थः सदासत्त्वगुणाश्रितो भव। तथा निर्योगक्षेमोऽनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव। आत्मवानप्रमत्तश्च भव। एष तवोपदेशः स्वधर्ममनुतिष्ठतः ॥४५॥

ननु च यदि स्वर्गादिकं परमं फलं न भवति तर्हि किमिति वेदैस्तत्साधनतया कर्माणि विधीयन्ते तत्राह—

( श्रीधरीव्याख्या ) त्रैगुण्यविषया इति। त्रिगुणात्मकाः सकामा येऽधिकारिणस्तद्विषयास्तेषां कर्मफलसम्बन्धप्रति-पादकाः वेदाः। त्वं तु निस्त्रैगुण्यो निष्कामो भव। तत्रोपाय-माह निर्द्वन्द्वः सुखदुःखशीतोष्णादियुगलानि द्वन्द्वानि तद्रहितो भव। तानि सहस्वेत्यर्थः। कथमित्यत्राह—नित्यसत्त्वस्थः सन् धैर्यमवलम्ब्येत्यर्थः। तथा निर्योगक्षेमः। अप्राप्तस्वीकारो योगः, प्राप्तपरिपालनं क्षेमस्तद्रहितः। आत्मवान् अप्रमत्तः। नहि द्वन्द्वा-कुलस्य योगक्षेमव्यापृतस्य च प्रमादिनस्त्रैगुण्यातिक्रमः सम्भव-तीति ॥४५॥

( भावार्थबोधिनी ) त्रैगुण्यविषया वेदाः—वेद तीन गुणोंका

विषय है। जैसे कर्म, धर्म और फल। वेदमें पूर्वका कर्म है, उसीके अनुकूल शरीर बनता है। शरीरके धर्मसे बाह्य वस्तुमें प्रिय और अप्रिय बोध होकर फलका भोग होता है। वही सामने आता है और कर्तव्य बनता है। उसी क्रियाको करना चाहिये। प्रिय और अप्रियको समझकर कर्तव्यका त्याग न करना चाहिये।

( ६ )

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥

गी० अ० ८, श्लो० ११

पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्याभिधानं करोति भगवान्--

(शाङ्करभाष्यम्) यदिति। यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति "तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" [बृ. ३. ८. ८] इति श्रुतेः। सर्वविशेषनिवर्तकत्वेनाभिवदन्ति "अस्थूलमनणु" [बृ. ३. ८. ८] इत्यादि। किंच विशन्ति प्रविशन्ति सम्यग् दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीला संन्यासिनो वीतरागा वीतो विगतो रागो येभ्यस्ते वीतरागाः। यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः, ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति तत्ते पदं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपस्तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि॥ ११॥

केवलादभ्यासयोगादपि प्रणवाधारमभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते ।

( श्रीधरीव्याख्या ) यदक्षरमिति । यदक्षरं वेदान्तज्ञा वदन्ति "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति श्रुतेः । वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति । यच्च ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्यं चरन्ति । तत्ते तुभ्यं पदं पद्यते गम्यते इति पदं प्राप्यं सङ्ग्रहेण सङ्क्षेपेण प्रवक्ष्ये तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

( भावार्थबोधिनी ) यदक्षरं वेदविदो वदन्ति । वर्तमान शरीर में ( अक्षरमन ) पूर्व के धर्मसे वेद है । वही बोलता है, और वही सुनता है । विषयको वीतराग होकर देखता है । पूर्व में ब्रह्ममें जैसा आचार धारण किया है, वैसाही करता है, और कराता है ।

( ७ )

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥

गीता, अ० ११, श्लो० ४८

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत इति स्तौति—

( शाङ्करभाष्यम् ) न वेदेति । न वेदयज्ञाध्ययनैः चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च, वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्, तथा न दानैस्तुलापुरुषादिभिः न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिः नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैः घोरैः एवंरूपो यथादर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरुप्रवीर ॥ ४८॥

एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह—

( श्रीधरीव्याख्या ) नेति—वेदाध्ययनातिरेकेण यज्ञाध्ययनस्याभावात् यज्ञशब्देन यज्ञविद्याः कल्पसूत्राद्या लक्ष्यन्ते । वेदानां यज्ञविद्यानां चाध्ययनैरित्यर्थः । न च दानैर्न च क्रियाभिरग्निहोत्रादिभिर्न चोग्रैस्तपोभिश्चान्द्रायणादिभिरेवंरूपोऽहं त्वदन्येन मनुष्यलोके द्रष्टुं शक्यः । अपि तु त्वमेव केवलं मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि ॥ ४८ ॥

( भावार्थबोधिनी ) न वेदयज्ञाध्ययनैर्न दानैरिति—शरीरमें मन और भाव ये दो हैं । भाव तो सामने के विषय को देखता है, और मन भावके देखे हुए विषय को अपनेमें रखता है । भूतकालकी वस्तु को मन जानता है, भाव नहीं जानता । भविष्यमें भूतकालकी बात कहता है । इससे भावका सम्बोधन करके मन कहता है कि–किये हुए कर्मको तुम नहीं जानते, मैं जानता हूँ ।

( ८ )

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

गी० अ० ११, श्लो० ५३

कस्मात्—

( शाङ्करभाष्यम् ) नाहमिति । नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना, न दानेन गोभूहिरण्यादिना, न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥ ५३ ॥

तत्र हेतुः —

(श्रीधरीव्याख्या) नाहमिति—स्पष्टार्थः ॥ ५३ ॥

(भावार्थबोधिनी) नाहं वेदैर्न तपसा इति । शरीर में मन कहता है कि भूतकालका विषय तुम्हारे सामने आता है, पर उसे तुम नहीं जानते, मैं उसका रूप और गुण जानता हूँ ।

( ९ )

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥

गीता, अ० २, श्लो० ४२

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—

( शाङ्करभाष्यम् ) यामिति—यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्ष इव शोभमानां श्रयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । के ? अविपश्चितोऽल्पमेधसोऽविवेकिन इत्यर्थः । वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः, हे पार्थ ! नान्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवं-वादिनो वदनशीलाः ॥ ४२ ॥

ननु कामिनोऽपि कष्टान्कामान्विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति तत्राह—

(श्रीधरीव्याख्या ) यामिति—पुष्पितां पुष्पितविषलतावदापातरमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं ये तेषां तया वाचाऽपहृतचेतसां व्यवसायात्मिका बुद्धिः समाधौ न विधीयत इति तृतीयेनान्वयः । किमिति तथा वदन्ति यतोऽविपश्चितो मूढाः । तत्र हेतुः—वेदे ये वादा अर्थवादाः "अक्षय्यं ह वै चातुर्मास्याजिनः सुकृतं भवति" "अपाम सोममसृता अभूम" इत्याद्यास्तेष्वेव रताः प्रीताः । अतएव अतः परमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वदनशीलाः ॥ ४२ ॥

( भावार्थबोधिनी ) यामिमां पुष्पितां वाचमिति—वर्तमान शरीर में पूर्वके कर्मका ज्ञान और शब्द पुष्प की जगह है, और उससे फल विषय होता है। और वह दूसरे शरीरका

विषय होता है। इसलिये वह अपने वेदके फलमें रत है। वही फलको विषय करके भोगता है, और दूसरे विषयका वाद करता है।

(१०)

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥

गीता, अ० २, श्लो० ४६

सर्वेषु वेदोक्तेषु कर्मसु यान्युक्तान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति उच्यते शृणु-

(शाङ्करभाष्यम्) यावानिति। यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानाचमनपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतः संप्लुतोदकेऽपि तावानेव सम्पद्यते तत्रान्तर्भवतीत्यर्थः। एवं तावांस्तावत्परिमाण एव सम्पद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो यत्कर्मफलं सोऽर्थो ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतो योऽर्थो यद्विज्ञानफलं सर्वतः सम्प्लुतोदकस्थानीयं तस्मिंस्तावानेव सम्पद्यते तत्रैवान्तर्भवतीत्यर्थः। "यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद् वेद यत्स वेद" [छां० ४, १, ४] इति श्रुतेः, "सर्वं कर्माखिलम्" [गी० ४, ३३] इति च वक्ष्यति। तस्मात्प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम्॥ ४६॥

ननु वेदोक्तनानाफलपरित्यागेन निष्कामतयेश्वराराधनविषया व्यवसायात्मिकाबुद्धिस्तु कुबुद्धिरेवेत्याशङ्क्याऽह—

( श्रीधरीव्याख्या ) यावानिति। उदकं पीयतेऽस्मिन्निल्युदपानं वापीकूपतडागादि तस्मिन् स्वल्पोदके एकत्र कृत्स्नस्यार्थस्याभावात्तत्र तत्र परिभ्रमणेन विभागशो यावान्स्नानपानादिरर्थः प्रयोजनं भवति, तावान्सर्वोऽप्यर्थः सर्वतः सम्प्लुतोदके महाह्रदे एकत्रैव यथा भवति, एवं यावान्सर्वेषु वेदेषु तत्तत्कर्मफलरूपोऽर्थ स्तावान्सर्वोऽपि विजानतो व्यवसायात्मकबुद्धियुक्तस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव, ब्रह्माऽनन्दे क्षुद्राऽनन्दानामन्तर्भूतत्वात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः ॥ ४६ ॥

( भावार्थबोधिनी ) यावानर्थ उदपाने। यावान् यानी संसारमें सारा विषय जगत्के अनुकूल ( अर्थ ) होता है। प्रत्येक शरीरमें पूर्व संस्कारके अनुकूल वह वेद रहता है। वही ब्राह्मण है और वही जानता है। वर्तमानमें संसार एक समुद्रकी तरह है। पुरुष कूपकी जगह है, और स्त्री वापीकी जगह है। पुरुषका कार्य त्याग कर्म है, और स्त्रीका कार्य ग्रहण करना है। कूप अपने जलको ऊपरसे ग्रहण करनेवालोंके लिए त्याग करता है। वावड़ी ऊपरसे मेघका तथा भीतरसे कूपको, भी जल ग्रहण करती है। समुद्रका कार्य सबकी परस्पर सहायता करना है। इसी दृष्टान्तके अनुसार पुरुष और स्त्रीका व्यवहार है।

( ११ )

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥

गीता, अ० २, श्लो० ५२

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यत इत्युच्यते—

( शाङ्करभाष्यम् ) यदेति । यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येनात्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते तत्तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति अतिशुद्धभावमापत्स्यत इत्यर्थः । तदा तस्मिन् काले गन्ताऽसि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च, तदा श्रोतव्यं श्रुतं च ते निष्फलं प्रतिपद्यत इत्यभिप्रायः ॥५२॥

कदा तत्पदमहं प्राप्स्यामीत्यपेक्षायामाह—

( श्रीधरीव्याख्या ) यदेति द्वाभ्याम् । मोहो देहादिष्वात्मबुद्धिः तदेव कलिलम् । "कलिलं गहनं विदुः" इत्यभिधानकोशस्मृतेः । ततश्चायमर्थः—एवं परमेश्वराराधने क्रियमाणे यदा तत्प्रसादेन तव बुद्धिर्देहाभिमानलक्षणं मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति तदा श्रोतव्यस्य श्रुतस्य चार्थस्य निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि । तयोरनुपादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः ॥५२॥

( भाषार्थबोधिनी ) यदा ते मोहकलिलमिति । शरीरके भावमें मोह है । संसाररूपी वन गहन है इसलिए यह अपने

प्रयोजनकी वस्तु पहिचान नहीं सकता (अर्थात् सुन नहीं सकता और सुने बिना देख नहीं सकता)। जब आत्मा बुद्धिमें निश्चय करायेगा तब प्रयोजन सिद्ध होता है। वह पूर्वके कर्मसे आत्मबुद्धिश्रुतिद्वारा निश्चय करने पर अपने प्रयोजनके अनुसार उस गहन वनको पार करता है।

( १२ )

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप॥

गीता, अ० ४, श्लो० ५

या वासुदेवेऽनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरञ्श्रीभगवानुवाच यदर्थो ह्यर्जुनस्य प्रश्नः—

(शाङ्करभाष्यम्) बहूनीति। बहूनि मे मम व्यतीतान्यतिक्रान्तानि जन्मानि तव च हे अर्जुन। तान्यहं वेद जाने सर्वाणि न त्वं वेत्थ न जानीषे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात्। अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हे परन्तप॥ ५॥

इति पृष्टवन्तमर्जुनं रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरम्—श्रीभगवानुवाच।

(श्रीधरीव्याख्या) बहूनीति। मम बहूनि जन्मानि तव च व्यतीतानि। तानि सर्वाण्यहं वेद जानामि, अलुप्तविद्याशक्तित्वात्। त्वं तु न वेत्थ न जानासि, अविद्यावृतत्वात्॥ ५॥

( भावार्थबोधिनी ) बहूनि मे व्यतीतानीति—शरीरमें ग्रहण करनेवाली ज्ञानेन्द्रिय हैं, और त्यागकर्म करनेवाली कर्मेन्द्रिय हैं। इनको ही भावशब्द से कहा गया है। वह भाव वर्तमानकालका बोधक है। और मन भूत और भविष्यत् का बोधक है। वह भावके द्वारा वर्तमानका ज्ञान करता है। भूतकालिकज्ञान चित्त द्वारा होता है। मन नित्य है और भाव अनित्य है। दोनों इस शरीरमें हैं। और मन दूसरा शरीर बनाता है। वह कर्मरूपी वेद मन है। यही बात इस श्लोकसे ध्वनित है।

(१३)

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥

गीता, अ० ७, श्लो० ८

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

(शाङ्करभाष्यम् ) रस इति। रसोऽहमपां यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः। एवं सर्वत्र। यथाऽहमप्सु रसः, एवं प्रभास्मि शशिसूर्ययोः। प्रणव ओंकारः सर्ववेदेषु, तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः। तथा खे आकाशो शब्दः सारभूतः, तस्मिन् मयि खं प्रोतम् : तथा पौरुषं पुरुषस्य भावो पौरुषं यतः पुंबुद्धिर्नृषु, तस्मिन्मयि पुरुषाः प्रोताः ॥८॥

जगतः स्थितिहेतुत्वं प्रपञ्चयति—

( श्रीधरीव्याख्या ) रसोऽहमिति पञ्चभिः। अप्सु रसोऽहम्। रसतन्मात्ररूपया विभूत्या तदाश्रयत्वेनाप्सु स्थितोऽहमित्यर्थः। तथा शशिसूर्ययोः प्रभास्मि चन्द्रेऽर्के च प्रकाशरूपया

विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। सर्वेषु वेदेषु वैखरीरूपेषु तन्मूलभूतः प्रणव ओंकारोऽस्मि। खे आकाशे शब्दतन्मात्ररूपोऽस्मि। नृषु पुरुषेषु पौरुषमुद्यमोऽस्मि। उद्यमे हि पुरुषास्तिष्ठन्ति ॥८॥

(भावार्थबोधिनी) रसोऽहमप्सु कौन्तेय—आत्मा (अहम्) रूप, ब्रह्म "रस" स्वरूप, और पुरुष "विषय" स्वरूप है। शरीरकर्मके भेदसे मन और प्राण पूर्वकर्मके स्वरूपसे रस बनकर शरीरका धारण और प्रकाश करता है। वह वेदमें ओंकार और प्रणव है। वही शब्द सुनता है और वही पुरुषविशेषसे अर्थ भोगता है।

(१४)

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥

गीता, अ० १५' श्लो० १५

किञ्च—

(शाङ्करभाष्यम्) सर्वस्येति। सर्वस्य प्राणिजातस्योऽहमात्मा सन् हृदि बुद्धौ संनिविष्टः। अतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनम् अपगमनं च। येषां यथा पुण्यकर्मणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं च अपायनमपगमनं च। वेदैश्च सर्वैः

हमेव परमात्मा वेद्यो वेदितव्यः । वेदान्तकृद्वेदान्तार्थसम्प्रदायकृदित्यर्थः । वेदविद्वेदार्थविदेव चाहम् ॥ १५ ॥

किञ्च—

( श्रीधरीव्याख्या ) सर्वस्येति । सर्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहम् । अतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति । ज्ञानं च विषयेन्द्रियसंप्रयोगजं भवति । अपोहनं च तयोः प्रमोषो भवति। वेदैश्च सर्वैस्तत्तद्देवतादिरूपेणाहमेव वेद्यः । वेदान्तकृत्तत्सम्प्रदायप्रवर्तकश्च ज्ञानदो गुरुरहमित्यर्थः । वेदविदेव च वेदार्थविदहमेव ॥ १५ ॥

( भावार्थबोधिनी ) सर्वस्य चाहं हृदि सन्निविष्ट इति—सब शरीरोंमें जठराग्निके योग से प्राण होकर ( जड़ और चेतनके ) हृदयमें वंकर्मका मत लेकर वर्तमानमें पूर्वानुभूतकी स्मृति करता है । वह सब वेदों में रहकर वेदना करता है । पूर्वकर्मका भोग भोगकर उसका क्षय होता है, और आगेकी उत्पत्ति करता है । इसीसे शरीर का नाम वेदान्त है ।

( १५ )

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

गीता, अ० १५, श्लो० १८

यथा व्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धम्। तस्य नाम निर्वचनप्रसिद्धया अर्थवत्त्वं नाम्नो दर्शयन् निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्—

(शाङ्करभाष्यम्) यस्मादिति। यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारमायावृक्षबीजभूतादपि चोत्तमः उत्कृष्टतमः उर्ध्वतमो वा, अतः ताभ्यां क्षराक्षराभ्यामुत्तमत्वादस्मि लोके वेदे च प्रथितः प्रख्यातः। पुरुषोत्तम इत्येवं मां भक्तजना विदुः। कवयः काव्यादिषु च इदं नाम निबध्नन्ति, पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति॥ १८॥

एवंभूतं पुरुषोत्तमत्वमात्मनो नाम निर्वचनेन दर्शयति—

(श्रीधरीव्याख्या) यस्मादिति। यस्मात्क्षरं जडवर्गमतिक्रान्तोऽहं नित्यमुक्तत्वात्। अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात्। अतो लोके वेदे च पुरुषोत्तमः इति प्रथितः प्रख्यातोऽस्मि। तथा च श्रुतिः—'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इत्यादिः॥ १८॥

(भावार्थबोधिनी) यस्मात्क्षरमतीतोऽहमिति—इसलिए नाशको छोड़कर और पुरुषार्थको धारणकर लोक तथा वेदमें मैं पुरुषोत्तम नामसे प्रसिद्ध हूँ।

( १६ )

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥

गीता, अ० १७, श्लो० २३

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—

( शाङ्करभाष्यम् ) ॐ इति । ॐ तत्सत् इत्येवं निर्देशो, निर्दिश्यतेऽनेनेति निर्देशः, त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणस्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥२३॥

ननु चैवं विचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसतामसप्रायमेवेति व्यर्थो यज्ञादिप्रयास इत्याशङ्क्य तथाविधस्यापि सात्विकत्वापादनप्रकारं दर्शयितुमाह—

( श्रीधरीव्याख्या ) ओमिति । ॐ तत्सदित्येवं त्रिविधो ब्रह्मणः परमात्मनो निर्देशो नाम व्यपदेशःस्मृतः शिष्टैः । तत्र तावत् 'ओमिति त्रिवृद्ब्रह्म' इत्यादिश्रुतिप्रसिद्धेरोमिति ब्रह्मणो नाम, जगत्कारणत्वेनातिप्रसिद्धत्वात् , अविदुषां परोक्षत्वाच्च । तच्छब्दोऽपि ब्रह्मणो नाम । परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दो ब्रह्मणो नाम 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतेः । अयं त्रिविधोऽपि नामनिर्देशो विगुणमपि सगुणंकर्तुं समर्थ इत्याशयेन स्तौति । तेन त्रिविधेन ब्रह्मणो निर्देशेन ब्राह्मणाश्च वेदाश्च यज्ञाश्च पूर्वं सृष्ट्यादौ विहिताः विधात्रा निर्मिताः सगुणीकृता वा । यद्वा यस्यायं त्रिविधो निर्देशस्तेन परमात्मना ब्राह्मणादयः पवित्रतमाः सृष्टाः । तस्मात्तस्यायं त्रिविधो निर्देशोऽतिप्रशस्त इत्यर्थः ॥२३॥

( भावार्थबोधिनी ) ॐ तत्सदिति—भूतकालके निर्देशसे वर्तमानका शरीर है । उसकी विधिको ज्ञानरूपी ब्राह्मण स्मरण करता है । उसी वेदसे ब्राह्मण यज्ञपुरीको अनुकूल चलाता है ।

( १७ )

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ।।
गीता, अ० २, श्लो० २९

दुर्विज्ञेयोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते । कथं दुर्विज्ञेयोऽयमात्मेत्यत आह—

( शाङ्करभाष्यम् ) आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टपूर्वमद्भुतमकस्माद् दृश्यमाणं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं पश्यति कश्चित् । आश्चर्यवदेनं वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति । श्रुत्वा दृष्ट्वोक्त्वाप्येनं आत्मानं वेद न चैव कश्चित् । अथवा योऽयमात्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति । अतो दुर्बोध आत्मेत्यभिप्रायः ॥२९॥

कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति, आत्मा ज्ञानादेवेत्याशयेनात्मनो दुर्विज्ञेयतामाह—

( श्रीधरीव्याख्या ) आश्चर्यवदिति । कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत्पश्यति । सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानं पश्यन्निव विस्मयेन पश्यति असम्भावनाभिभूतत्वात् । तथा आश्च-

र्यवदन्यो वदति च। शृणोति चान्यः। कश्चित्पुनर्विपरीतभावनाभिभूतः श्रुत्वापि नैव वेद। चशब्दादुक्त्वापि दृष्ट्वापि न सम्यग् वेदेति द्रष्टव्यम् ॥२९॥

(भावार्थबोधिनी) आश्चर्यवदिति—शरीरमें पूर्वकर्मका ज्ञान चित्तमें रहता है। उसका नाम वेद है। वर्तमान शरीरमें विषयका ज्ञान होनेसे गुणका ज्ञान नहीं होता। इसलिए बोलनेमें, सुननेमें और देखनेमें आश्चर्य करता है। शरीरोंके भेदसे ही आश्चर्य है।

(१८)

श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥

-गीता, अ० १५, श्लो० १

यस्मात् मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलं, अतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति। किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यग्विज्ञानन्त इत्यतो भगवान् अर्जुनेनापृष्टोऽपि आत्मनस्तत्त्वं विवक्षुरुवाच। ऊर्ध्वमूलमित्यादिना तत्र तावद्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति। विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति—

(शाङ्करभाष्यम्) ऊर्ध्वमूलमिति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्वाच्चोर्ध्वम्; ब्रह्म उच्यते अव्यक्तं मायाशक्तिमत, तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः। श्रुतेश्च—"ऊर्ध्वमूलोऽवाक्शाखः एषोऽश्वत्थः सनातनः" [कठ ६, १] इति। पुराणे च—

"अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोच्छ्रितः ।
बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥
महाभूतविशाखश्च विषयैः पत्रवांस्तथा ।
धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतद्ब्रह्मवनं चैव ब्रह्मा चरति नित्यशः ॥
एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ।
ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः ॥"

[म० भा० अश्व० ४७, १२, १५] इत्यादि। तमूर्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं, न श्वोऽपि स्थाता इत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति अव्ययं संसारमायायाः अनादिकालप्रवृत्तत्वात्सोऽयं संसारवृक्षोऽव्ययो अनाद्यनन्त देहादिसंतानाश्रयो हि सुप्रसिद्धः, तमव्ययम्। तस्यैव संसारवृक्षस्येदमन्यद्विशेषणं छन्दांसि यस्य पर्णानि छादनात् ऋग्यजुःसामलक्षणानि यस्यसंसारवृक्षस्य पर्णानीव पर्णानि। यथा

वृक्षस्य परिरक्षणार्थानि, पर्णानि, तथा वेदाः संसारवृक्षपरिरक्षणार्थाः, धर्मतद्धेतुफलप्रदर्शनार्थत्वात्। यथा व्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदवित् वेदार्थविदित्यर्थः। नहि समूलात् संसारवृक्षादस्माज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति॥१॥

पूर्वाध्यायान्ते 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवतीत्युक्तम्, नचैकान्तभक्तिर्ज्ञानं वाऽविरक्तस्य संभवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत्सार्धश्लोकाभ्यां संसारस्वरूपं वृक्षरूपकालङ्कारेण वर्णयन्—

( श्रीधरीव्याख्या ) ऊर्ध्वमूलमिति। ऊर्ध्वमुत्तमं क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम्। अध इति ततोऽर्वाचीनाः कार्योपाधयो हिरण्यगर्भादयो गृह्यन्ते। ते तु शाखा इव शाखा यस्य तम्। विनश्वरत्वेन श्वः प्रभातपर्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः। प्रवाहरूपेणाविच्छेदादव्ययं च प्राहुः। ऊर्ध्वमूलोऽर्वाक्शाखः एषोऽश्वत्थः सनातनः' इत्याद्याः श्रुतयः। छन्दांसि वेदाः यस्य पर्णानि धर्माधर्मप्रतिपादनद्वारेण छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वापादनात्पर्णस्थानीया वेदाः। यस्तमेवंभूतमश्वत्थं वेद स एव वेदार्थवित्। संसारवृक्षस्य मूलमीश्वरः श्रीनारायणः। ब्रह्मादयस्तदंशाः शाखास्थानीयाः। स च संसारवृक्षो विनश्वरः

प्रवाहरूपेण नित्यश्च। वेदोक्तैः कर्मभिः सेव्यतामापादितश्चेत्येतावानेव हि वेदार्थः अतएव विद्वान् वेदवित् इति स्तूयते।

( भावार्थबोधिनी ) ऊर्ध्वमूलमिति—संसारवृक्षका दृष्टान्त सब शरीरोंमें समझना चाहिये। शरीरमें ऊर्ध्वमूल शिर है। और शाखा पाद है। पूर्वका कर्म अश्वत्थरूप अव्यय है। कर्मोंसे प्राणोंका छन्द ( व्यापार ) होता है वह जैसा वेदमें है वैसा ही फल भोगता है।





## अथ शुक्लयजुर्वेदीय—
## रुद्राष्टाध्यायी प्रारम्भः ।

श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य संकल्पः देशकालौ संकीर्त्य अद्य पूर्वोच्चारितैवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षसिद्धिद्वारा सर्वव्याधिनिरासपूर्वकं सर्वाभीष्टसिद्ध्यर्थं श्रीभवानीशङ्करदेवताप्रीत्यर्थं च रुद्रैकादशिन्या ( सकृदावर्तनेन वा ) अमुकद्रव्येण रुद्राभिषेकमहं करिष्ये । तदङ्गतया विहितान् शरीरशुद्ध्यर्थं लघुषडङ्गन्यासांश्च करिष्ये । मनोजूतिरिति मन्त्रस्य बृहस्पतिर्ऋषिः बृहतीछन्दः बृहस्पति-

देवता हृदयन्यासे जपे विनियोगः । ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳪ समिमन्दधातु ॥ विश्वे देवास ऽइह मादयन्तामो३म्प्रतिष्ठ ॥ ॐ हृदयाय नमः ॥ १ ॥ अबोध्यग्निरिति मन्त्रस्य बुधगविष्ठिरावृषी त्रिष्टुप् छन्दः अग्निर्देवता शिरोन्यासे जपे विनियोगः ॥ ॐ अबोध्यग्निः समिधा जनानाम्प्रति धेनुमिवायतीमुषासम् । यह्वाऽइव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ ॥ ॐ शिरसे स्वाहा ॥ २ ॥ मूर्द्धानमिति मन्त्रस्य भरद्वाज ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता शिखान्यासे जपे विनियोगः ॥ ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽ आजातमग्निम् ॥ कविᳪ सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः ॥ ॐ शिखायै वषट् ॥ ३ ॥ मर्म्माणि त इति मन्त्रस्य अप्रतिरथ ऋषिर्विराट् छन्दः मर्म्माणि देवता कवचन्यासे

जपे विनियोगः ॥ ॐ मर्म्माणि ते वर्म्मणा-च्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् ॥ उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानुदेवा मदन्तु ॥ ॐ कवचाय हुम् ॥ ४ ॥ विश्वतश्चक्षुरिति मन्त्रस्य विश्वकर्मा भौवन ऋषिः त्रिष्टुप् छन्दः विश्वकर्मा देवता नेत्रन्यासे जपे विनियोगः ॥ ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽ एकः ॥ ॐ नेत्रत्रयाय वौषट् ॥ ५ ॥ मानस्तोक इति मन्त्रस्य परमेष्ठी ऋषिः जगती छन्दः एको रुद्रो देवता अस्त्रन्यासे जपे विनियोगः ॥ ॐ मानस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ॥ मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ॐ अस्त्राय फट् ॥ ६ ॥

श्रीगणेशाय नमः ॥ हरिः ॐ ॥ गणानां-

न्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम ॥ आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥ १ ॥ गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ॥ बृहत्युष्णिहाककुप्सूचीभिः शम्यन्तु त्वा ॥ २ ॥ द्विपदा याश्चतुष्पदा त्रिपदा याश्च षट्पदाः ॥ विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥३॥ सहस्तोमाः सहछन्दस ऽआवृतः सहप्प्रमा ऽऋषयः सप्तदैव्व्याः ॥ पूर्व्वेषाम्पन्थामनुदृश्य धीरा ऽअन्वालेभिरे रथ्यो न रश्मीन् ॥ ४ ॥ ॐ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥ येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्व्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योति-

रुन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ७ ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्व्वम् ॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ८ ॥ यस्मिन्नृचः साम यजू७ँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिँश्चित्तꣳ सर्व्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ९ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेभीशुभिर्व्वाजिनऽइव ॥ हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ १० ॥ इति रुद्रे प्रथमोऽध्यायः ॥ १ ॥

हरिः ॐ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदꣳ सर्व्वं यद्भूतं यच्च भाव्व्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्ज्या-

यांश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपा-
दस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषः
पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ् व्यक्राम-
त्साशनानशनेऽअभि ॥ ४ ॥ ततो विराडजा-
यत विराजोऽअधि पूरुषः ॥ स जातोऽअत्यरि-
च्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्यज्ञा-
त्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे
वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥ तस्माद्-
यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ॥ छन्दा-
ꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥
तस्मादश्वाऽअजायन्त ये के चोभयादतः ॥
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥
तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन
देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ ९ ॥ यत्पु-
रुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखङ्कि-
मस्यासीत्किम्बाहू किमूरू पादाऽउच्येते ॥ १० ॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू

तदस्य यद्वैश्यः पद्भ्याᳬशूद्रो ऽअजायत॥११॥
चन्द्रमा मनसोजातश्चक्षोःसूर्य्यो ऽअजायत ॥
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥१२॥
नाभ्याऽआसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समव-
र्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२
ऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा
देवा यज्ञमतन्वत ॥ वसन्तोऽस्यासीदाज्यङ्ग्री-
ष्मऽइध्मः शरद्धविः ॥ १४ ॥ सप्तास्यासन्प-
रिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्त-
न्वाना ऽअबध्नन्पुरुषं पशुम् ॥१५॥ यज्ञेनयज्ञ-
मयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥
ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे साध्याः
सन्ति देवाः ॥ १६ ॥ अद्भ्यः सम्भृतः पृथि-
व्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्य
त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजान-
मग्रे ॥ १७ ॥ वेदाहमेतम्पुरुषम्महान्तमा-
दित्यवर्ण्णन्तमसः परस्तात् ॥ तमेव विदित्वाति

मृत्युमेति नान्यः पन्था विद्यतेयनाय ॥१८॥ प्रजापतिश्चरति गर्भे ऽअन्तरजायमानो वहुधा विजायते ॥ तस्य योनिम्परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥ यो देवेभ्य ऽआतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जनयन्तो देवा ऽअग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा ऽअसन्वशे ॥ २१ ॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म ऽइषाण सर्वलोकम्म ऽइषाण ॥२२॥ इति रुद्रे द्वितीयोऽध्यायः ॥ २ ॥

हरिः ॐ ॥ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोऽनिमिषऽएकवीरः शतꣳसेना ऽअजयत्साकमिन्द्रः ॥१॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहः

ध्वं युधो नरऽइषुहस्तेन वृष्णा ॥२॥ सऽइषु-
हस्तैः सनिषङ्गिभिर्वशी सꣳस्रष्टा सयुधऽइन्द्रो
गणेन ॥ सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा-
प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परिदीया
रथेन रक्षोहामित्राँ२ऽअप बाधमानः ॥
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्य-
विता रथानाम् ॥ ४ ॥ बलविज्ञाय स्थविरः
प्रवीरः सहस्वान्वाजी सहमानऽउग्रः ॥
अभिवीरोऽअभिसत्वा सहोजा जैत्रमिन्द्र रथमा
तिष्ठ गोवित् ॥५॥ गोत्रभिदङ्गोविदं वज्रबाहु-
ञ्जयन्तमज्म प्रमृणन्तमोजसा ॥ इमꣳ सजा-
ताऽअनुवीरयध्वमिन्द्रꣳ सखायोऽअनु सꣳरभध्वम्
॥ ६ ॥ अभि गोत्राणि सहसा गाहमानो दयो
वीरः शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाड-
युध्योऽस्माकꣳ सेनाऽअवतु प्रयुत्सु ॥ ७ ॥
इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु-
सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्ती-

नाम्मरुतोयन्त्वग्म्रम् ॥ ८ ॥ इन्द्रस्य व्वृष्णो व्वरुणस्य राज्ञऽ आदित्यानाम्मरुताᳬशर्द्धऽउग्रम ॥ महामनसाम्भुवनच्च्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाᳬसि ॥ उद्वृत्रहन्वाजिनां व्वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः ॥ १० ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्ष्वस्माकं य्याऽ इषवस्ता जयन्तु ॥ अस्माकं व्वीराऽ उत्तरे भवन्त्वस्माँ२॥ऽउ देवाऽ अवता हवेषु ॥११॥ अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्प्वे परेहि ॥ अभिप्प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥ अवसृष्टा परापत शरव्व्ये ब्रह्मसᳬशिते ॥ गच्छामित्त्रान्प्रपद्यस्व मामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥ प्रेता जयता नर ऽइन्द्रो वः शर्म्म यच्छतु ॥ उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १४ ॥ असौ या सेना मरुतः परेषामभ्येति नऽओजसा स्प

दुर्ह्यमाना ॥ ताङ्गूहत तमसापंव्रतेन यथामीऽअ-
न्योऽअन्यन्न जानन् ॥१५॥ यत्र बाणाः सम्प-
तन्ति कुमारा विशिखाऽइव ॥ तत्र ऽइन्द्रो बृहस्प-
तिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु
॥१६॥ मर्म्माणि ते वर्म्मणाच्छादयामि सोम-
स्त्वा राजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयो वरुण
स्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु ॥ १७ ॥
इति रुद्रे तृतीयोऽध्यायः ॥ ३ ॥

हरिः ॐ ॥ विभ्राड् बृहत्पिबतु सोम्म्यम्म-
द्ध्वायुर्दधद्यज्ञपतावविहुतम् ॥ वातजूतो यो
ऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति
॥ १ ॥ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः ॥
दृशे विश्वाय सूर्य्यम् ॥२॥ येना पावक चक्षसा
भुरण्यन्तञ्जनाँ२॥ ऽअनु ॥ त्वं वरुण पश्यसि॥३॥
दैव्यावद्ध्वर्य्यूऽआगतः रथेन सूर्य्यत्वचा ॥ मद्ध्वा-
यज्ञः समञ्जाथे ॥ तम्प्रत्नथाऽयंवेनश्चित्र-
न्देवानाम् ॥ ४ ॥ तम्प्रत्नथा पूर्व्वथा विश्व-

येमथा ज्ज्येष्ठनातिम्वर्हिषदंऽस्वर्विदम् ॥ प्रती-
चीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु
वर्द्धसे ॥ ५ ॥ अयं वेनश्चोदयत्पृश्निगर्भा-
ज्ज्योतिर्जरायु रजसो विमाने॥ इममपाऽसंङ्गमे
सूर्य्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ॥ ६ ॥
चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य वरुण-
स्याग्नेः॥ आ प्रा द्यावापृथिवी ऽअन्तरिक्षꣳसूर्य्य
ऽआत्मा जगतस्तस्थुषश्च ॥७॥ आ नऽ इडा-
भिर्विदथे सुशस्ति विश्वानरः सविता देवऽएतु॥
अपि यथा युवानो मत्सथानो विश्वञ्जगदभिपि-
त्वे मनीषा ॥ ८ ॥ यदद्य कच्च वृत्रहन्नुदगा
ऽअभि सूर्य्य ॥ सर्वन्तदिन्द्र ते वशे ॥ ९ ॥
तरणिर्विश्वदर्शतोज्ज्योतिष्कृदसि सूर्य्य ॥ वि-
श्वमाभासि रोचनम् ॥ १० ॥ तत्सूर्य्यस्य देव-
त्वन्तन्महित्वम्मध्या कर्त्तोर्विततꣳसञ्जभार ॥
यदेदयुक्त हरितः सधस्थादाद्रात्री वा-
सस्तनुते सिमस्मै ॥ ११ ॥ तन्मित्रस्य वरु-

ऽइषवे नमः॥ बाहुभ्यामत ते नमः ॥१॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥ शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् ॥ ३ ॥ शिवेन व्वचसा त्वा गिरिशाच्छा व्वदामसि ॥ यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् ॥ ४ ॥ अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्व्यो भिषक् ॥ अहींश्च सर्व्वाञ्जम्भयन्त्सर्वाश्च यातुधान्न्योऽधराचीः परासुव ॥ ५ ॥ असौ यस्ताम्म्रोऽअरुण ऽउत बब्भ्रुः सुमङ्गलः॥ ये चैनꣳ रुद्द्रा ऽअभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेडऽईमहे ॥६॥ असौ योवसर्प्पति नीलग्ग्रीवो व्विलोहितः ॥ उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥७॥ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य सत्त्वानो हन्तेभ्योकरन्नमः॥ ८ ॥ प्रमुञ्च धन्न्वनस्त्वमुभयोरात्त्न्योर्-

णस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥ बण्महाँ२॥ ऽअसि सूर्य्य बडादित्यमहाँ२॥ ऽऽअसि ॥ महस्ते सतो महिमापनस्य तेद्धा देव महाँ २॥ ऽअसि ॥ १३ ॥ बट् सूर्य्य श्रवसा महाँ२॥ऽअसि सत्रा देव महाँ२॥अंसि ॥ मह्ना देवानामसुर्य्यः पुरोहितो विभुज्योतिरदाभ्यम् ॥ १४ ॥ श्रायन्तऽइव सूर्यं विश्वेदिन्द्रस्य भक्षत ॥ वसूनि जाते जनमानऽओजसा प्रतिभागन्न दीधिम ॥ १५ ॥ अद्या देवाऽउदिता सूर्य्यस्य निरहंहसः पिपृता निरवद्यात ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी ऽउत द्यौः ॥ १६ ॥ आ कृष्णेनरजसा वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ १७ ॥ इति रुद्रे चतुर्थोऽध्यायः ॥ ४ ॥

हरिः ॐ ॥ नमस्ते रुद्र मन्यवऽउतो त

उज्ज्यांम् ॥ याश्चं ते हस्तुऽइषंवुः परा ता भंगवो वप ॥९॥ विज्ज्युन्धनुः कपर्दिनो विशल्यो- बाणंवाँ२॥ ऽउत ॥ अनेशन्नस्य याऽइषंवऽआ- भुरस्य निषङ्गधिः ॥ १० ॥ यातें हुतिर्म्मीढु- ष्टम हस्तें बुभूवं ते धनुः ॥ तयास्म्मान्विश्श्व- तुस्त्वमंयुक्ष्मया परिं भुज ॥११॥ परिं ते धन्वं- नो हे तिरुस्मान्वृंणक्तु विश्श्वतंः॥ अथो यऽइंषु- धिस्तवारेऽअस्म्मन्निधेंहि तम्॥१२॥ अवतत्य धनुष्ट्वᳪ सहस्राक्ष शतेषुधे॥ निशीर्य्य शल्ल्यानाम्मुखा शिवो नंः सुमना भव ॥ १३ ॥ नमंस्तुऽआयुंधा- यानातताय धृष्णवें ॥ उभाब्भ्यामुत ते नमो बाहुब्भ्यान्तव धन्वंने ॥१४॥ मा नो महान्तंमु- त मा नोऽअर्भकम्मा नुऽउक्षन्तमुत मा नंऽउक्षि- तम् ॥ मा नो वधीः पितरम्मोत मातरम्मा नंः प्प्रियास्तन्न्वो रुद्र रीरिषः ॥ १५ ॥ मानंस्तोके तनंये मा नुऽआयुंषि मा नो गोषु मा नो ऽअश्श्वेषु रीरिषः ॥ मा नो वीरान्नुंद्र भामिनो

ऽवधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥
नमो हिरण्यबाहवे । सेनान्ये दिशाञ्चपतये
नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्प-
तये नमो नमः शष्पिञ्जराय त्विषीमते पथी-
नाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टा-
नाम्पतये नमो नमो बभ्लुशाय ॥ १७ ॥ नमो
बभ्लुशाय । व्याधिनेन्नानाम्पतये नमो नमो
भवस्य हेत्यै जगताम्पतये नमो नमो रुद्रायात-
तायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै
वनानाम्पतये नमो नमो रोहिताय ॥ १८ ॥
नमो रोहिताय । स्थपतये वृक्षाणाम्पतये नमो
नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये
नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये
नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीना-
म्पतये नमो नमः कृत्स्नाय तया ॥ १९ ॥
नमः कृत्स्नायतया । धावते सत्त्वनाम्पतये
नमो नमः सहमानाय निव्याधिन आव्या-

धिनो नाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचराया-रण्यानाम्पतये नमो नमो व्वञ्चते ॥२०॥ नमो व्वञ्चते। परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणे ऽइषुधिमते तस्कराणाम्पतये नमो नमः स्रकायिभ्यो जिघांᳬसद्भ्यो मुष्णता-म्पतये नमो नमो सिमद्भ्यो नक्तञ्चरद्भ्यो व्विकृन्तानाम्पतये नमः॥२१॥ नमऽ उष्णी-षिणे। गिरिचराय कुलुञ्चानाम्पतये नमो नमऽ इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो व्विसृजद्भ्यः ॥२२॥ नमो विसृजद्भ्यो। व्विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्र-द्भ्यश्च वो नमो नमः शयानेभ्यऽ आसीने-भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः ॥२३॥ नमः सभाभ्यः

